क्षीणः श्लेष्मा, मध्यक्षीणो वातः हीनक्षीणं पित्तं
क्षीणः श्लेष्मा, अधिकक्षीणो वातः मध्यक्षीणं पित्तं
णः श्लेष्मा, हीनक्षीणो वातः अधिकक्षीणं पित्तं
णः श्लेष्मा, अधिकक्षीणो वातः हीनक्षीणं पित्तं मध्य-
श्लेष्मा, मध्यक्षीणो वातः अधिकक्षीणं पित्तं हीन-
श्लेष्मा । क्षीणेत्यादि । अत्र मध्यशब्देन स्वस्थोऽ-
ते, अधिकशब्देन च वृद्धः । तत्र क्षीणमध्याधिक-
षट् । तद्यथा—क्षीणो वातः स्वस्थं पित्तं वृद्धः श्लेष्मा,
वातः वृद्धं पित्तं स्वस्थः श्लेष्मा, स्वस्थो वातः पित्तं
वृद्धः श्लेष्मा, वृद्धो वातः क्षीणं पित्तं स्वस्थः श्लेष्मा,
वातः पित्तं वृद्धं क्षीणः श्लेष्मा, वृद्धो वातः स्वस्थं
क्षीणः श्लेष्मा । अथ द्विक्षीणैकवृद्धांस्त्रीनाह—वातपित्ते
वृद्धः श्लेष्मा, वातश्लेष्माणौ क्षीणौ पित्तं वृद्धं, पित्त-
णौ क्षीणौ वातो वृद्धः । अथ द्विवृद्धैकक्षीणानाह—
ते वृद्धे क्षीणः श्लेष्मा, वातश्लेष्माणौ वृद्धौ क्षीणं पित्तं,
श्लेष्माणौ वृद्धौ क्षीणो वातः । एवमनेन प्रकारेण,
याताः कथिताः, त्रयो दोषाः वातपित्तश्ले[illegible] ।
र्थः श्लोकैरुच्यते । तद्यथा,—

[illegible] भवेत ।

मध्यः श्लेष्मोल्बणो वायुः पित्तं हीनं तथा स्थितम् ॥१३॥
मध्यवातोऽधिकं पित्तं हीनवृद्धस्तथा कफः ।
एवमेते भवन्त्यत्र सन्निपातास्त्रयोदश ॥ १४ ॥
पूर्वैर्द्वादशभिः सार्धं विकल्पाः पञ्चविंशतिः ।
यथा वृद्धैस्तथा क्षीणैर्दोषैः स्युः पञ्चविंशतिः ॥ १५ ॥
क्षीणस्वस्थाधिकैरेभिर्दोषभेदा भवन्ति षट् ।
क्षीणः समीरणस्तत्र स्वस्थं पित्तं कफोऽधिकः ॥ १६ ॥
क्षीणो वायुः कफः स्वस्थः पित्तमत्राधिकं तथा ।
क्षीणं पित्तं मरुत् स्वस्थो भेदोऽन्यस्मिन् बली कफः ॥१७॥
क्षीणं पित्तं कफः स्वस्थः प्रवृद्धस्त्वधिको मरुत् ।
श्लेष्मा क्षीणोऽनिलः स्वस्थः पित्तमत्र तथोल्बणम् ॥१८॥
कफः क्षीणः समं पित्तं प्रवृद्धस्तु समीरणः ।
क्षीणस्वस्थाधिकैरेवं भेदाः षट् परिकीर्तिताः ॥ १९ ॥
क्षीणं गते मरुत्पित्ते प्राप्तो वृद्धिं तथा कफः ।
क्षीणौ समीरणकफौ तथा स्यात् पित्तमुत्कटम् ॥ २० ॥
क्षीणौ पित्तकफौ तद्वन्नभस्वान् स्यात्तु वृद्धिमान् ।
द्वौ क्षीणावेको वृद्धश्च भेदत्रयमिति स्मृतम् ॥ २१ ॥
वातपित्ते गते वृद्धिं संप्राप्तश्च क्षयं कफः ।
वृद्धौ वातकफौ तद्वत् पित्तं चाथ क्षयं गतम् ॥ २२ ॥
तद्वत् पित्तकफौ वृद्धौ प्रक्षीणश्च मरुत् पुनः ।
एकक्षीणद्विवृद्धैश्च त्रयो भेदा भवन्त्यमी ॥ २३ ॥
क्षीणमध्याधिकैस्त्वेवं भेदा द्वादश कीर्तिताः ।
प्रकृतिस्थैः समीराद्यैस्तथैकः परिकीर्तितः ॥ २४ ॥
त्रिषष्टिर्दोषभेदानामिति सम्यङ्निरूपिता ॥ इति ।

एतेषां वातपित्तश्लेष्मणां लक्षणानि उच्यन्ते—तद्यथा—वातवृद्धौ वाग्बाहुल्यं गात्रस्फुरणं ऊष्मकामिता निद्रानाशोऽल्पवाक्त्वं गाढवर्चस्कं चेति, पित्तवृद्धौ पीतावभासता सन्तापः शीतकामित्वं अल्पनिद्रता मूर्च्छा बलहानिः दौर्बल्यं पीतविण्मूत्रनेत्रत्वं चेति, श्लेष्मवृद्धौ शौक्ल्यं शैत्यं गौरवमवसादं तथा निद्रा वह्निविश्लेषश्च । वातक्षये मन्दचेष्टता अल्पवाक्त्व[illegible] मप्रहर्षो मूढसंज्ञता, पित्तक्षये मन्दोष्माग्निता रूक्षताऽन्तर्दा[illegible] आमाशयेतरश्लेष्माशयशिरसां शून्यता सन्धिशैथिल्यं तृष[illegible] दौर्बल्यं च । एवंविधैर्लक्षणैः प्रकृतिसमसमवेतानां वृद्ध[illegible] क्षीणानां च वातपित्तश्लेष्मणामवगमो मिश्रैश्च लक्षणैः सं[illegible] सन्निपातावगम इति ।

क्षीणमध्याधिकस्य एकक्षीणवृद्धानां च केषांचिल्लक्षणानि [illegible]च्यन्ते । तद्यथा—

[illegible]कः क्षीणस्त्वेको [illegible]